REPRINT FROM THE PANDIT.

# लक्षणावली ।

न्यायाचार्यश्रीमदुदयनविरचिता ।

शेषशार्ङ्गधराचार्यविरचितया न्यायमुक्ता-
वल्याख्यया टीकया सहिता ।

वाराणसीस्थराजकीयसंस्कृतपाठशालीयेन
न्यायाध्यापकेन तर्कतीर्थोपाधिधारिणा
श्रीसुरेन्द्रलालगोस्वामिना
संस्कृता ।

THE

# LAKṢAṆĀVALĪ

OF

# UDAYANĀCĀRYA

WITH THE COMMENTARY

NYĀYAMUKTĀVALI

OF

ÇEṢAÇĀRṆGADHARA

EDITED BY

SURENDRALĀLA GOSVĀMIN
PROFESSOR, SANSKRIT COLLEGE, BENARES.

BENARES:
PRINTED AT THE MEDICAL HALL PRESS.

1900.

Price 12 annas.] [मूल्यम् ॥]

REPRINT FROM THE PANDIT.

# THE LAKṢAṆĀVALĪ OF UDAYANACĀRYA

WITH THE COMMENTARY

NYĀYAMUKTĀVALĪ

OF

ÇEṢAÇĀRṈGADHARA

EDITED BY

SURENDRALĀLA GOSVĀMIN
PROFESSOR, SANSKRIT COLLEGE, BENARES.



BENARES:
PRINTED AT THE MEDICAL HALL PRESS.

1900.

# BIBLIOGRAPHICAL NOTICE.

The Lakṣaṇāvalī is Udayanācārya's often quoted Manual of Vaiçeṣika Definitions. It appears to have been written in 984 A. D. (vide p. 72 *infra*; where the second verse will be recognised as Udayana's *mudrā* found in most of his works.)

The present text of Çārngadhara's commentary is based on the only available MS.—No. 2076 of the India Office Library—kindly lent by the Right Honourable the Secretary of State for India. The I. O. MS. furnishes a satisfactory text when the obvious errors of the scribe have been corrected.

Çārngadhara's date is not known. His only reference to himself or, more strictly, to his family name is found on p. 72 *infra*, where he fancifully describes himself as "a Çeṣa in his destruction of the arrogance of arrogant opponents." He probably lived in the XVI Century. He could not have lived earlier than the beginning of the XV Century as he quotes (pp. 15. 23 *infra*) from the Tattvapradīpikā of Citsukhācārya and the Vedāntakalpataru of Amalananda both of whom flourished *circ.* 1300—1352 A.D. (vide Praçastapādabhāṣya: Introduction p. 23, note: Vizianagram Sanskrit Series). On the other hand, it is not likely that he lived into the XVII Century; for a MS. of the Padārthacandrikā by Çeṣānanta (No. 2089 I. O. Cat.) bears Samvat 1658 as the date of its transcription, and this author declares in another of his works, the Nyāyasiddhāntadīpaprabhā, that his own guru was one Çeṣa Çārngadhara :—

सोऽयं शशधराचार्यकृतिव्याकृतिकैतवात् ।
शेषः शार्ङ्गधरादिष्टपुष्टधीरुपतिष्ठते ॥

At any rate, it is clear that our Çārngadhara could not have been the well—known Paddhati writer who lived in the XIV Century (cf. R. G. Bhandarkar's Report 1882—83 p. 43.)

Among the writers attacked by Çārṅgadhara is "the author of the Tarkasaṃgraha," a metrical treatise belonging to the Vedānta or Mīmāmsā school (cf. pp. 14. 18-20. *infra.*) If the author here intended be Annam Bhaṭṭa, whose works on the two Mīmāmsās are extant, the reference to him through his celebrated Nyāya-Vaiçeṣika Manual is emphasized by its indirectness and, as a piece of ironical courtesy, is quite in keeping with the polemical character of our text. But this identification is only conjectural. Annam Bhaṭṭa's other works are not available in Benares, and the notices of them in Catalogues are insufficient for the purpose in hand. Further, the title *Tarkasaṃgraha* could appropriately belong to a Mīmāmsā treatise now lost or extant under another name.

Annam Bhaṭṭa's date is uncertain. He has been assigned to the period between 1625 and 1700 A. D.* But the evidence for placing him after Gadādhara and for the suggestion that he borrowed from Raghunātha's Dīdhiti does not seem conclusive as against the evidence of a MS. of the Tarkasaṃgraha dated Samvat 1642† (1585 A. D.)

Another writer mentioned by our author is Vādīndra or Vādīça. As the name is not common (cf. Aufrecht's Cat. Catal), it may be permitted to identify this Vādīndra with the only Vādīndra known to philosophical bibliography as the guru of Rāghava Bhaṭṭa who composed the Nyāyasāravicāra in Çaka 1274.‡

The Daçaçlokīviḍambana is a work mentioned in our text (p. 6) but otherwise unknown.

A. V.

---

* Tarkasaṃgraha ed. M. R. Bodas: Preface p. IV. (1897).

† This MS. belongs to Pandit Vindhyeçvarīprasāda Dvivedin, Librarian of the Sanskrit College, Benares. Another MS. belonging to the same Pandit is dated Samvat 1744 and is therefore older than the MS. described by Bodas, p. IV.

‡ Not Çaka 1174 as read by Hall in his Bibliographical Index.

॥ श्रीः ॥

# लक्षणावलीमूलग्रन्थस्य सूचीपत्त्रम् ।

## न्यायमुक्तावलीटीकायाः सूचीपत्रम् ।

॥ श्रीः ॥

# न्यायमुक्तावलीटीकासहिताया लक्षणावल्याः शुद्धिपत्त्रम् ।

| पृष्ठाङ्काः | पङ्क्त्यङ्काः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ८ | २० | तत्सत्त्वे | तदसत्त्वे |
| १० * | १ | चेत् | केचित् |
| १० * | १७ | नन्वात्म | तथात्म |
| १० * | २४ | गस्यात्मतिषि | गस्याकाशे प्रतिषि |
| १३ * | १ | बोध्यत्वं | बाध्यत्वं |
| १४ | २६ | स्यावशं | स्यावश्यं |
| १५ | २१ | रूपवद्या | रूपवदग्रा |
| १५ | २३ | नस्यैघो | नस्यैवो |
| १६ | ८ | प्रसङ्गात् | प्रसङ्गात् । |
| १७ | ८ | सम्भवात् । | सम्भवात् |
| २० | २३ | दिति सत्म | दितिसत्म |
| २७ | २२ | पाडया | पीडया |
| २७ | २५ | शरार | शरीर |
| ३४ | २४ | शब्दस्यति | शब्दस्येति |
| ४५ | १७ | एव बा | एव वा |
| ४६ | २३ | स्वाकारात् | स्वीकारात् |
| ४७ | २ | शिर वद्ु | शिरवद्ु |
| ४७ | २२ | व्याप्यसिद्ध | व्याप्यसिद्धे |
| ४७ | २५ | शिर इति वदि | शिरइतिवदि |

* एतच्चिह्नयुक्तपत्त्रसंख्यीयशुद्धपाठाः आदर्शपुस्तके[illegible]ऽपि सम्भावनीयत्वेनादृताः।

THE

# LAKṢAṆĀVALĪ

OF

# UDAYANĀCĀRYA

WITH THE

COMMENTARY

NYĀYAMUKTĀVALĪ

OF

ÇEṢAÇĀRṈGADHARA.

उदयनाचार्यविरचिता

# लक्षणावली ।

प्रणम्य पार्वतीनाथं नित्यविज्ञानमीश्वरम् ।
द्रव्यादिसर्वमेयानां करिष्ये लक्षणावलीम् ॥

शेषशार्ङ्गधरविरचिता

# न्यायमुक्तावली ।

श्रीमद्द्वारकाधिपतये गोपालाय नमः । श्रीहयग्रीवाय नमः ।
श्रीशेषभैरवगुरुचरणाभ्यां नमः । श्रीः ॥

आनन्दरूपमुन्मीलन्नीलनीरजलोचनम् ।
वन्दामहे भवध्वान्तध्वंसिनं रुक्मिणीपतिम् ॥
हृद्यस्वादितमदिरावैभवमाद्यदृक्छिलोचनां बालाम् ।
बालारुणकरभासुरवसनां कमलासनां वन्दे ॥
विपक्षाक्षेपसत्पक्षपरिक्षेपपुरन्दरान् ।
नमस्यामो गुरून्न्यायसहस्रकिरणान् वयम् ॥

शिष्टाचारानुमितकर्तव्यताकं चिकीर्षितप्रकरणपरिसमाप्तिप्रचयपरिपन्थिविघ्नविघातकं नमस्कारलक्षणं मङ्गलमाचरितं दर्शयति। **प्रणम्येति**। इह यद्यपि बहुलं विप्रतिपत्तीरुद्भाव्य साधकबाधकप्रमाणे अभिधीयेते तथापि इदमत्र निपुणतरं निरूपयतु भवान् ।

कर्मनिर्मितवैचित्र्यमनीशं यदि गीयते ।
जगत् ततो जगत्कर्तृकथापि प्रथते कथम् ॥

भवेदेतदेवं यद्यचेतनप्रवृत्तेः चेतनाधिष्ठानपूर्वकत्वेन नियमे प्रयोजकान्तरमुपलभ्येत न त्वेतदस्ति योग्यस्यानुपलम्भबाधितत्वात् । अयोग्यप्रयोजकशङ्कायाः शङ्क्यमानप्रयोजकप्रतिक्षेपकत्वेनैव दूरापास्तत्वात् । निरुपाधिकस्य च साध्यपरित्यागे स्वभावपरित्यागप्रसङ्गात् । यदि चानधिष्ठितमेव प्रवर्तेत अचैतन्यं न स्यात् । न चाचेतनस्य चेतनाधिष्ठानमन्तरेणाप्रवृत्तौ त्रैकालिकव्यभिचाराभावस्य विमर्शशीलेनापि भवता निर्णेतुमशक्यत्वाद्व्यभिचारशङ्कायां प्रतिबन्धासिद्धिराशङ्कनीया । भाविशङ्काबाधकवैधुर्यस्य विमर्शशीलेनापि भवता निर्णेतुमशक्यत्वात् । तथा च कथं प्रतिबन्धासिद्धिः । भाविबाधकाभावानिर्णयेन व्यभिचारशङ्काया एवानुदयादिति यत्किञ्चिदेतत् विस्तरस्त्वन्यत्र ।

**अभिधेयः पदार्थः । स द्विविधः । भावाभावभेदात् । तत्र नञर्थविषयत्वरहितप्रत्ययविषयो भावः । स च षोढा द्रव्यादिभेदेन । तत्रानित्यद्रव्यगुणकर्मसामान्यविशेषाः समवेताः । नित्यद्रव्यसमवायाभावाः समवेतत्वरहिताः । द्रव्यगुणकर्माणि समवेतवन्ति । सामान्यविशेषसमवायाभावाः समवेतरहिताः ।**

**अभिधेय** इति स्वरूपसङ्कीर्तनं न तु लक्षणम् । अभिधेयत्वस्य केवलान्वयित्वेन लक्षणत्वानुपपत्तेः । लक्षणत्वे वा केवलान्वयित्वानुपपत्तिः । केवलव्यतिरेकी हेतुविशेषो लक्षणमिति स्वत एवाभिधानात् । धर्मिस्वरूपज्ञापकत्वस्यापि प्रयोजनस्य सत्त्वात् लक्षणत्वमिति केचित् ।

कश्चायं भावो नाम विधिविषयो वा निषेधाविषयो वा । प्रथमे ऽपि यद्यस्तीतिधीविषयत्वं विधिविषयत्वं तर्ह्यभावो ऽस्तीत्यस्तिप्रत्ययविषयत्वादभावस्यापि भावत्वापत्तिः । न चैतदभिलाभमात्रं[1] भावे ऽपि तथात्वप्रसङ्गात् । अबाधात्तत्प्रमात्वं नात्रापि दण्डवारितमिति सन्तोष्टव्यम् । अथानञ्पूर्वकप्रयोगविषयत्वम् । तन्न । प्रलयविनाशादिषु व्यभिचारात् । नापि द्वितीयः । इहाभावो नास्तीतिनिषेधविषयत्वेनासम्भवित्वादित्याशङ्क्यानाकलितपराभिसन्धेरियं वाचो युक्तिरित्याह । नञर्थेति । न च नञर्थानिरुक्तिः प्रस्तावे निरूपयिष्यमाणत्वात् ।

## तत्र गुणात्यन्ताभावानधिकरणं द्रव्यम् ।

द्रव्यलक्षणमाह । तत्रेति । उत्पन्नं द्रव्यं क्षणमगुणं तिष्ठतीत्यङ्गीकारे समुत्पत्त्यनन्तरक्षणे द्रव्यतया विवक्षितस्य घटादेर्घटादिकार्यतया घटादिगुणानां कार्यकारणभावस्य नियतपौर्वापर्यरूपत्वात् समसमयमेवानुत्पत्तेरुत्पत्त्यनन्तरं लब्धस्वरूपेण घटादिना जन्यत्वात् गुणप्रागभावाधिष्ठानस्य गुणवत्त्वाभावात् लक्ष्यद्रव्यैकदेशे लक्षणावृत्तिलक्षणाव्याप्तिः स्यात् तां परिहर्तुमत्यन्ताभावानधिकरणत्वमुक्तम् । ननूत्पन्नं द्रव्यं क्षणमगुणं तिष्ठतीत्युक्तावुत्पत्त्यनन्तरक्षणस्य द्रव्यविशेषणत्वोपलक्षणत्वपक्षयोः प्रथमे समवायाभावव्यतिरिक्तवस्तुविशेषणविशेष्यभावस्य सम्बन्धान्तरपुरःसरत्वस्यास्मत्पक्षे ऽवश्याश्रयणीयत्वात् सम्बन्धनिरूपणे कार्ये क्षणद्रव्ययोश्च निरूप्यमाणे सम्बन्धे परस्परासमवेतत्वात् तयोः समवायसम्बन्धाभावात्

(१) अभिलापमात्रमिति सम्भाव्यते ।

संयोगे ऽवश्योद्भाव्ये द्वितीये ऽप्यसम्बन्धस्यानुपलक्षकत्वात् सम्बन्धे निरूप्ये प्राचीनवैपरीत्या संयोगे ऽवश्योद्भाव्ये क्षण-संयोगलक्षणगुणाधिकरणत्वात् तस्य तत्र कुतोऽव्याप्तिरिति चेत् उदारान्तःकरणोऽसि यदालोच्यापि कार्यकारणभाव-हानिं न व्यथसे इत्यलमव्याप्तिपरिहारगवेषणया। यत्त्वत्र तत्त्वप्रदीपिकाकारेणोत्पत्त्यनन्तरक्षणे अव्याप्तिमुद्भाव्य गु-णवत्त्वात्यन्ताभावानधिकरणत्वे च परिहारमाशङ्क्योत्प-त्त्यनन्तरक्षणविशिष्टे कदाचिदपि गुणानुदयात् पुनरव्याप्तेः तदवस्थत्वान्नैवमिति परिहृतम्। तत् कलशपुरःसरप्रासाद-निर्माणतुल्यम्। तत्र यस्मिन् विशिष्टे ऽव्याप्तिरुद्भाव्यते तत् किमिदं विशिष्टं नाम। किं युष्मत्सिद्धं पदार्थान्तरम्। उतास्माकीनमेकबुद्ध्यारूढविशेषणविशेष्यतत्सम्बन्धस्वरू-पानतिरिक्तं विवक्षितम्। प्रथमे तावदनङ्गीकारपराहतिरेव। द्वितीये चैवंविधस्यालक्ष्यत्वादेव नाव्याप्तिः। न ह्यस्माभिरपि क्षणतत्सम्बन्धसहितस्य स्वरूपस्य द्रव्यत्वमङ्गीक्रियते शुद्ध-स्य तथात्वात् तत्र चाव्याप्तिपरिहारस्योक्तत्वात्। यदपि तत्त्वप्रदीपिकाकारेण प्रजगल्भे गुणवत्त्वात्यन्ताभाव एको-ऽनेको वा एकश्चेत्तर्हि स्वस्य स्वाधिकरणत्वे स्वाश्रयदोषः प्रादुःष्यादिति गुणवत्त्वात्यन्ताभावोऽपि गुणवत्त्वात्य-न्ताभावानधिकरणतयैवाङ्गीकार्यो भवद्भिरिति हा हन्त स्वपोषितमेव द्रव्यलक्षणम्। अनेकश्चेत्तदपि सर्वगुणवत्त्वा-त्यन्ताभावानधिकरणत्वं कियद्गुणवत्त्वात्यन्ताभावान-धिकरणत्वं वा द्रव्यलक्षणं न द्वयमपि गुणवत्त्वात्यन्ताभा-वस्य स्वानधिकरणत्वेन सर्वगुणवत्त्वात्यन्ताभावानधिकर-णत्वकियद्गुणवत्त्वात्यन्ताभावानधिकरणत्वलक्षणलक्षण-योगित्वादतिव्याप्तिरिति। तदपि न चेतसि चमत्कारमाधत्ते। सर्वपदेन दूषयिता किं समुदायं विवक्षति उत प्रतिप्रतीकं

गुणवत्त्वात्यन्ताभावात् । आद्योऽस्मद्वज्रोपहतः । द्वितीये दोषकलामपि न कलयामहे । गुणवत्त्वात्यन्ताभावे तदतिरिक्तगुणवत्त्वात्यन्ताभाववृत्तेरभ्युपगमात् प्रतिप्रतीकापेक्षानधिकरणत्वाभावात् । अस्तु वैकत्वपक्षविवक्षा तथापि न नः किञ्चिदपचीयते । गुणवत्त्वात्यन्ताभावस्य स्वानधिकरणत्वानभ्युपगमात् । न चैवमात्माश्रयदोषापत्तिः शङ्कनीया । उत्पत्तिज्ञप्त्योरप्रतिबन्धात् । अन्यथा केवलान्वयिभङ्गप्रसङ्गात् । नन्वेवमपि गुणवत्त्वात्यन्ताभावानधिकरणत्वस्य गुणवत्त्वात्यन्ताभावात्यन्ताभावरूपत्वात् तस्य चाभावस्य हि योऽभावो भाव एव विशिष्यत इति न्यायेन गुणवत्त्वातिरिक्तत्वाभावात् सैवाव्याप्तिः स्यादिति चेत् । न । तस्य गुणवत्त्वातिरिक्तत्वाभ्युपगमात् । अतिरिक्तत्वाभिधानं न युक्तिमत् तत्त्वे तन्नियतत्वस्यैव वक्तव्यत्वात् पुनरव्याप्तिरिति चेत् । मैवं वोचः । गुणप्रागभावाधिकरणे गुणवत्त्वात्यन्ताभावानधिकरणत्वसत्त्वे ऽपि गुणवत्त्वाभावेन तन्नियतत्वानुपपत्तेरिति सर्वं सुस्थम् ।

शिष्यव्युत्पादनाय लक्षणान्तरमाह । **मूर्त्तत्वरहितसमवेतसमवेतत्वरहितमूर्त्तत्वरहितामूर्त्तत्वरहितसमवेतजातिमद्वेति** । नन्वत्र मूर्त्तत्वरहिते यत् समवेतं तत्र समवेतत्वरहितत्वं विवक्षितं मूर्त्तत्वरहितं यत् समवेतं तत्र वा । नाद्यः । कर्मण्यतिव्याप्तेः । तस्या असिद्धावस्यासिद्धिरिति चेत् । न । कर्म कर्मवृत्तिघटव्यावृत्तत्वरहितकर्मवृत्तिगुणवृत्तित्वरहितजातिमत् जातिमत्त्वात् गगनवदिति जातिसिद्धौ तत्सिद्धेः । ननु गगननिष्ठाया जातेः कर्मवृत्तिघटव्यावृत्तत्वरहितत्वं किं कर्मवृत्तित्वे सत्यपि घटव्यावृत्तत्वरहितत्वाद्वा भवेत् घटव्यावृत्तत्वे सत्यपि

कर्मवृत्तित्वरहितत्वाद्वा भवेत्। तत्र प्रथमे तावत् न सा सत्ता गुणवृत्तित्वरहितपदेन तस्या निरस्तत्वात्। तत्र विशिष्टव्यावृत्तिः कर्मावृत्तित्वेनेति चेत्। न। कर्मवर्ति-न्याः कर्मव्यावृत्तत्वानुपपत्तेः कर्मव्यावृत्तत्वेनापि तस्या निरस्तत्वाच्च। द्रव्यत्वमपि न सा तस्याः कर्मावृत्तित्वात् जात्यन्तरस्य शङ्कितुमप्यशक्यत्वादित्यप्रसिद्धविशेष-णत्वात्। नापि द्वितीयः। घटकर्मानिष्ठगगननिष्ठजात्य-सिद्धौ दृष्टान्तस्य साध्यविकलत्वादिति चेत्। न। कर्मा-वृत्तिघटव्यावृत्तत्वरहितद्रव्यत्वजात्या साध्यप्रसिद्धेः एवं गुणेषु गुणत्वेन साध्यप्रसिद्धिर्द्रष्टव्या। नापि द्वितीयः। गुणे कर्मणि चातिव्याप्तेः कथं मूर्त्तत्वरहितामूर्त्तत्वरहितसम-वेतसत्तावत्त्वेनेति ब्रूमः। गुणकर्मसमवेतजातौ विशेषणं निरवकाशमिति चेत्। न। जात्याद्यवृत्तित्वेन सावकाश-त्वात्। अत्रोच्यते।

> अमूर्त्ते समवेतं यत्तत्राभावो विवक्ष्यते।
> न च कर्मण्यतिव्याप्तिः तज्जातौ मानहानितः॥

मूर्त्तत्वरहिते यत् समवेतं तत्समवेतत्वरहितत्वस्या-भ्युपेतत्वात्। न च कर्मण्यतिव्याप्तिः गुणनिष्ठत्वरहितघट-निष्ठाया जातेः कर्मनिष्ठत्वे मानाभावात्। न चोक्तं मानं कर्म गुणावृत्तिघटनिष्ठजातिरहितं द्रव्यत्वानधिकरणत्वात् सम्मतवदितिसत्प्रतिपक्षग्रस्तत्वात्। न च केवलान्वयि-त्वेन सत्प्रतिपक्षत्वासम्भवः। केवलान्वयित्वस्यैवात्रास-म्भवात्। दशश्लोकीविडम्बने तदनिरुक्तेरुक्तत्वाच्च।

> अमूर्त्तं समवेतं यत्तत्र वा तन्निषिध्यते।
> न गुणादावतिव्याप्तिर्व्यवच्छित्तेर्विशेषणात्॥

मूर्त्तत्वरहितं यत् समवेतं तत्र वा समवेतत्वं प्रति-षिध्यते। न च गुणादावतिव्याप्तिः। अमूर्त्तसमवे-

तमात्रनिष्ठात्यन्ताभावप्रतियोगित्वस्य मूर्त्तत्वरहितसमवेतसमवेतत्वरहितशब्दार्थत्वेन तयोरव्यवच्छिन्नत्वादिति सर्वं सुस्थम् । गुणत्वेन गुणादावतिव्याप्तिपरिहारार्थं अमूर्त्तत्वरहितसमवेतपदम् । एवमपि सत्तया तत्रैवातिव्याप्तिस्तदर्थं प्रथमम् । मूर्त्तत्वरहितविशेषणं तु न लक्षणशरीरानुप्रवेशि व्यावर्त्याभावात् । ननु पृथिवीत्वादीनामपि लक्षणत्वप्रसक्तावव्याप्तिः । न । तद्योगिनोऽपि द्रव्यत्वात् न तु तद्योगिन एव एवंविधद्रव्यत्वस्यापि सम्भवात् न च लक्षणे सामान्यशब्दः क्वापि विनाबाधं विशेषपरो भवति ।

**गन्धासमवेतगगनारविन्दसमवेतजातिमद्द्रव्यमिति** द्रव्यलक्षणं निगदव्याख्यातम् । अरविन्दविशेषणं तु न लक्षणशरीरानुप्रवेशि व्यावर्त्याभावात् ।

**समवेतसमवेतसमवेतं वा इति ।** समवेतं समवेतं यत्र तत् समवेतसमवेतं समवेतसमवेतं समवेतं यत्र तत् समवेतसमवेतसमवेतमिति द्रष्टव्यम् । नन्वनुपपन्नमेतत् गुणादावतिव्याप्तेः तस्य समवेतवत्सामान्यसमवायित्वात् अस्ति हि सामान्यलक्षणस्य द्रव्यत्वानधिकरणत्वे सति समवायाभ्यभावत्वेन समवेतत्वम् । अर्थस्यैव समवेतवत्त्वं नानर्थस्येति चेत् । न । तस्य तदसमवायित्वे तल्लक्षणस्य तत्त्वानुपपत्तिः सामान्यस्वरूपव्याघातश्चासमवायित्वे वा नियमानुपपत्तिः । अभावः स इति चेत् कोऽसाविति निरुच्य वक्तव्यम् । ध्वंसप्रागभावयोरन्यतरः स इति चेत् । न । तन्नित्यत्वेनैव तयोरपहस्तितत्वात् । अस्तु तर्हि अन्योन्याभाव इति चेत् । नैतदपि साधीयः ।

तत्र वृत्त्यवृत्तिभ्यां व्याघातात् अत्यन्ताभावत्वाभ्युपगमे नोक्तो दोष इति चेत्। सत्यमेतत्। तत्समानाधिकरणत्वस्यापरस्यैव सम्भवात्। तथाहि।

जात्यत्यन्ताभाववत्त्वं जातित्वे चेत् प्रयोजकम्।
जात्यत्यन्ताभाव एव जातित्वं ते प्रसज्यते॥
नैव जातेर्लक्षणं हि जातिमत्त्वेन सम्मतम्।
स्वात्यन्ताभाववत्यां स जातौ तादृश इष्यते॥
जात्यत्यन्ताभाववत्त्वं नान्यथा लक्षणं भवेत्।
स्वात्यन्ताभावसामानाधिकरण्यं ततो भवेत्॥

अधिकव्याप्तेश्च। भावोऽप्यसमवेत एवेति चेत्। न। नित्यद्रव्यसमवाययोरन्यतरत्वप्रसङ्गात्। ओमिति ब्रुवतस्तल्लक्षणत्वानुपपत्तिर्बाधिका। प्रथमे ऽसम्भवित्वं द्वितीये ऽतिव्यापकत्वमित्यस्त्वेतत्। अत्रोच्यते।

लक्षणं यद्यजन्यं स्यात् सर्वाभावः कथं भवेत्।
अथ जन्यत्वमिष्येतातदूवृत्तित्वं(१) कथं भवेत्॥

जातिलक्षणस्याजन्यभावत्वे प्रलयो न स्यात्। तथाहि नित्यानेकसमवेतत्वं जातिलक्षणमिष्यते। तत् यदि नित्यं भवेत् घटादिभाव एव भवेत् न हि घटाद्यभावे घटत्वादीनामनेकसमवेतत्वमुपपद्यते तथा च कथं प्रलयः सिद्ध्येदिति तत्सत्त्वे वा तदजन्यत्वं न स्यात् न हि नित्यस्यासत्त्वमुपपद्यते नित्यत्वव्याघातात्। अथ जातिलक्षणं जन्यमित्युच्येत जातिसमवेतत्वं न स्यात् जातेः कार्यानाश्रयत्वात् कार्याश्रयत्वोपपत्तौ जातित्वं न स्यात् तदसमवाये च कथं जातेः समवेतवत्त्वम्। कोऽसौ पदार्थेष्विति चेत् औपाधिकं सामान्यमिति ब्रूमः। अभाव एवेति केचित्।

(१) अथ जन्यत्वमिष्येत तद्वृत्तित्वमिति सम्भाव्यते।

न च प्रागुक्तो दोषः । जात्यभावत्वस्यानङ्गीकृतत्वात् । कस्तर्हि प्रतियोगी न कश्चित् कस्तर्हि अनयोः सम्बन्ध इति चेत् विशेषणविशेष्यभाव एवेति गृहाण । तथापि प्रलयदशायामेवाव्याप्तिः परिहर्तुं शक्येति(१) चेत् नित्यानेकसमवेतत्वात्यन्ताभावानधिकरणत्वादिति मूकीभव । सत्यमेवमतिव्याप्तिपरिहारः स्यादतिव्याप्तिरेव तु दुरभिधाना । समवेतं समवेतं यत्र तत्समवेतं यत्रेति हि लक्षणार्थो वर्णितः । न चासौ युज्यते समवेतशब्दयोरर्थभेदाभावेन सामानाधिकरण्यानुपपत्तेः समवेतशब्दस्य सप्तमीतत्पुरुषेण समवेतसमवेतशब्देन बहुव्रीहिरप्यशक्याश्रयणः घटसमवेते रूपे समवेतं रूपत्वं रूपे समवेतमित्यतिव्याप्तेरिति । तन्न । यत्समवेते समवेतं यत्र समवेत(२)मिति निरुच्य समवेतस्वसमवेतसमवेतत्वस्य लक्षणस्याभ्युपगमात् ।

## तच्च नवधा भिद्यते पृथिव्यादिभेदेन ।

द्रव्यलक्षणमभिधायेदानीं तन्नियममाह । तच्चेति । शब्दस्य द्रव्यान्तरत्वान्नायं नियम इति चेत् । न । तत्र मानाभावात् । श्रोत्रं नित्यद्रव्यग्राहकं निरवयवेन्द्रियत्वात् मनोवदित्यस्ति मानमिति चेत् । न । मूर्त्तेन्द्रियत्वेन सोपाधित्वात् । श्रोत्रमात्मत्वानधिकरणाजन्यद्रव्यग्राहकं न भवति निरवयवेन्द्रियत्वात् मनोवदिति विपर्ययव्याप्तत्वेन विरुद्धत्वाच्च । शब्दो द्रव्यं मूर्त्तप्रत्यक्षानाश्रितत्वे सति प्रत्यक्षत्वात् आत्मवदिति चेत् । न । अश्रौत्रत्वेन सोपाधिकत्वात् । शब्दो द्रव्यं न भवति श्रोत्रग्राह्यत्वात् शब्दत्ववदिति सत्प्रतिपक्षत्वाच्च । आत्मत्वेनानैकान्तिकत्वमिति

(१) न शक्येति सम्भाव्यते ।

(२) यत्समवेते समवेतं समवेतमिति सम्भाव्यते ।

चेत् । तन्न । मूर्त्तानाश्रितत्वप्रत्यक्षानाश्रितत्वयोरभिधानात् । अस्तु तर्हि मूर्त्तपदानर्थक्यमिति चेत् । न । वायुस्पर्शव्यभिचारनिवृत्त्यर्थत्वात् । अपि च जन्यद्रव्यतायां सावयवानित्यत्वे स्याताम् । जन्यद्रव्यतायामपि[१] चेत् मूर्त्तत्वमणुतयैन्द्रियकत्वं न स्यात् अमूर्त्तत्वमपि न श्रोत्रप्रत्यक्षत्वानुपपत्तेरेव । नन्वात्मनोऽमूर्त्तद्रव्यत्वेऽपि मनोवेद्यत्वमिव श्रोत्रप्रत्यक्षत्वमस्याविरुद्धम् । अपरथा नात्मा मानसप्रत्यक्षः अमूर्त्तद्रव्यत्वादाकाशवदित्यपि स्यात् । नैतत् । सम्बन्धासम्भवात् न ह्यर्थासम्बन्धमिन्द्रियमर्थं गृह्णातीति दृष्टचरम् । कुतोऽसम्बन्ध इति चेत् नित्यद्रव्यतया समवायासम्भवात् अजसंयोगस्तु नेष्यते । नन्वजानां संयोगो नेष्यते उताजः संयोगः । नाद्यः । अपसिद्धान्तप्रसङ्गात् । न द्वितीयः । आकाशमात्मसंयोगि द्रव्यत्वात् घटवदितिप्रमाणसिद्धतया तस्यावश्याभ्युपेयत्वात् । उच्यते । अजः संयोगो नेष्यत इति । न चायं प्रमाणसिद्धतयाशक्यापह्नव इति वाच्यम् । मूर्त्तत्वोपाधिग्रस्ततया तत्प्रामाण्यस्यैवानभ्युपगमात् । नन्वात्मसंयोगित्वस्यात्मनिष्ठसंयोगाधिकरणत्वसाधने बाधात् आत्मनिष्ठस्वसंयोगाधिकरणत्वसाधने साध्यविकलो दृष्टान्तः आत्मसंयोगित्वसिद्धेः पूर्वमात्मनि स्वसंयोगित्वस्याप्रसिद्धत्वेन अप्रसिद्धविशेषणता च दुर्वारा । आकाशं नैतदात्मसंयोगाधिकरणं विभुत्वात् एतदात्मवत् आत्मा वा नाकाशसंयोगाधिकरणं विभुत्वादाकाशवदिति सत्प्रतिपक्षग्रस्तत्वाच्च आकाशेन सह संयोगस्यात्प्रतिषिध्यमानत्वा[२]न्न साध्यविकलो दृष्टान्तः न चा-

(१) अजन्यद्रव्यतायामपीति सम्भाव्यते ।

(२) अत्रादर्शपुस्तके कतिपयपदानि पतितानीति सम्भाव्यते ।

काशाभिन्नत्वमुपाधिः रूपादौ साध्याव्याप्तेः अपि चैवं वदता विभागोऽपि स्वीकर्तव्यः द्रव्यत्वहेतोरविशिष्टत्वात् सोऽप्यस्त्विति चेत् कथं तर्हि न संयोगाजन्यव्याघात इति मूकीभव विस्तरस्त्वन्यत्रेत्युपरम्यते । अस्तु तर्हि तमसो द्रव्यत्वं तथाहि ।

अस्ति तावत् तमो नीलमिति धीर्न च साप्रमा ।
प्रमात्वे बाधकाभावात् पीते नीलप्रतीतिवत् ॥ १ ॥
क्षितिर्न विषयस्तस्याः सति तेजोविरोधिनि ।
नियतं जायमानत्वात् तेजोभावप्रतीतिवत् ॥ २ ॥
अबादिविषया सेति वचनं न मनोहरम् ।
सम्यङ्नीलप्रतीतित्वान्नीले नीलप्रतीतिवत् ॥ ३ ॥
न चाविषयता युक्ता धीत्वाद्रूपादिबुद्धिवत् ।
गुणादिविषयत्वं तु शङ्कितुं नैव शक्यते ॥ ४ ॥
तस्मात्तदाश्रयो द्रव्यमिति तावत् प्रतीयते ।
तदाश्रयत्वादेवं यत्तदेवं सम्मतं यथा ॥ ५ ॥

स्यादेतत् यदि नीलधीरबाधिता स्यात् तदेव तु असिद्धं तमसो नीलत्वे नीलरूपाश्रयत्वे वा आलोकानपेक्षचक्षुर्ग्राह्यतैव न सिद्ध्येदिति चेत् तत् किमालोकसापेक्षचक्षुर्ग्राह्यता नीलत्वे नीलरूपाश्रयत्वे वा प्रयोजिकेति मन्यसे ओमिति ब्रुवन् किं विषयातिरिक्तालोकापेक्षचक्षुर्ग्राह्यत्वं प्रयोजकमुत विषयभूतालोकापेक्षचक्षुर्ग्राह्यत्वमाहोस्विदन्यदेवेति विकल्प्य प्रष्टव्यः । प्रथमे ऽप्यालोकग्रहे चक्षुरालोकान्तरमपेक्षते न वा प्रथमे कथमालोकाभावश्चाक्षुषः आलोकसत्त्वे स एव नास्तीति धर्म्यभावादेवाचाक्षुषत्वम् । असत्त्वे सहकारिवैधुर्यादचाक्षुषत्वमिति दुरुत्तरं व्यसनम् । कथमालोकस्य तद्ग्रहे सहकारित्वमिति चेत् यद्ग्रहे हि

यदपेक्षं चक्षुस्तदभावग्रहे ऽपि तदपेक्षत इति भवद्भिरेवाभिधानात् नापेक्षत इति पक्षे कथमालोकस्यापि चाक्षुषत्वमिति विविच्य वक्तव्यम् । एवमेव चेत् तमसैव किमपराद्धमिति यत्किञ्चिदेतत् । नापि द्वितीयः । अलोकव्यतिरिक्तचाक्षुषाणामचाक्षुषत्वप्रसङ्गात् । अथ घटादिग्रहे विषयव्यतिरिक्तमालोकमपेक्षते आलोकग्रह एव नातिरिक्तं केवलस्यैव तत्र सामर्थ्यादिति मन्यसे । तन्न । नियामकाभावात् तस्यापि रूपिमहत्तया घटादिवद्विषयातिरिक्तालोकापेक्षचक्षुर्ग्राह्यताया एव वक्तव्यत्वाच्च । न चात्र तदन्यत्वं प्रयोजकमिति वाच्यम् । आलोकाभावे नियमासिद्धेः । विषमव्याप्तिरेवायमित्युक्ते ऽपि न निस्तारः । तमस्तोमावृतानां सुवर्णादीनामतिरिक्तालोकापेक्षचक्षुर्ग्राह्याणां तदन्यत्वानवगमात् । अथापि स्यात् सामर्थ्यभेदः अत्रापि किं न स्यात् । बाधादिति चेत् । न । तस्योभयत्रापि समानत्वात् । अथ द्रव्यत्वे ऽद्रव्यं यदि तर्हि रूपवतो मूर्त्तिनान्तरीयकतया निरवयवद्रव्यस्य परमाणुतयैन्द्रियकत्वं न स्यात् नाप्यनेकद्रव्यं स्पर्शरहितत्वेन अनारब्धत्वात् मनोवत् ततः कथं द्रव्यत्वमपि द्रव्यत्वे रूपवत्त्वं चेति मन्यसे । तन्न । रूपवतोऽपि गगनादेर्भाट्टैरमूर्त्तत्वाभ्युपगमात् । तस्यापि रूपवत्त्वे बाधकं वक्ष्यत इति चेत् । न । तदपि तेन न निरस्यत इति कुतोऽवगतम् । अस्तु वानेकद्रव्यत्वम् । स्पर्शरहितद्रव्यत्वान्न तदुत्पद्यत इति चेत् । न । स्पर्शरहितस्यापि घटादेरुत्पत्तिदर्शनात् । न च ते स्पर्शवन्त एवोत्पद्यन्त इति साम्प्रतम् । क्षणमगुणं तिष्ठतीत्यभ्युपगमविरोधात् । अथ स्पर्शरहितद्रव्यत्वान्न तदुत्पद्यत इति यदि ब्रूयां तदा स्यादेवैष दोषः न त्वेवं ब्रवीमि अपि तु स्पर्शरहितद्रव्यत्वान्न तदवयवास्तदारम्भका इति मन्यसे । तन्न ।

धर्मिग्राहकबोध्यत्वं सिद्धास्ते धर्मिणो यदि ।
धर्मित्वं यत्यसिद्धानामाश्रयासिद्धिरुद्भटा ॥ १ ॥
परसिद्धस्य धर्मित्वमङ्गीकर्तुं न शक्यते ।
एवमन्यतरासिद्धेर्लोप एव प्रसज्यते ॥ २ ॥
किं च
परसिद्धिः प्रमाणं चेत् तया बाधः प्रसज्यते ।
यदि सा न प्रमाणं स्यादाश्रयासिद्धिरेव ते ॥ ३ ॥
किञ्च रूपितया स्पर्शो यदा तत्रानुमीयते ।
तदापि साधनासिद्धिरिति सर्वं समञ्जसम् ॥ ४ ॥
तस्मान्नवत्वनियमो नैव सिद्धिमुपाश्नुते ।
तमसो दशमत्वस्य संसिद्धेर्मानयुक्तितः ॥ ५ ॥

अत्राभिधीयते । कथमिह तमसो द्रव्यत्वमभिधीयते तत्र मानाभावात् । न चाबाधितनीलधीविषयत्वं मानम् । आलोकानपेक्षचक्षुर्ग्राह्यत्वस्यैव बाधकत्वात् । न चात्र विकल्पावकाशः विषयातिरिक्तत्वानतिरिक्तत्वयोरन्यतरत्वस्याभ्युपेतत्वात् सर्वथालोकापेक्षाया दुर्वारत्वात् । न चात्रोभययथापि तदपेक्षा सम्भाविनीति स्वरूपासिद्धिरेव पर्यवस्येत् । न चालोकाभावस्य तद्व्यञ्जकत्वाङ्गीकारात् आलोकानपेक्षचक्षुर्ग्राह्यतेति साम्प्रतम् । तस्य तद्व्यञ्जनीयत्वे मानाभावात् रूपवचाक्षुषत्वेनालोकापेक्षचक्षुर्ग्राह्यताया एव वक्तव्यत्वाच्च । न चैवमालोकेऽपि विषयातिरिक्तालोकापेक्षचक्षुर्ग्राह्यत्वमनुमातुं शक्यं गौरवात् । अपि च तमसोऽजन्यत्वं जन्यत्वं वाभ्युपेयेत म प्रथमः अप्रत्यक्षतापत्तेः रूपवदजन्यत्वस्य अप्रत्यक्षत्वेन व्यभिचारानुपलब्धेः । अजन्यरूपवतोऽपि गगनादेः प्रत्यक्षत्वान्नैवमिति चेत् । न । अजन्यरूपवत्त्वे प्रत्यक्षत्वानुपपत्तेः । अजन्यरूपवतो-

ऽपि प्रत्यक्षत्वे को दोष इति चेत् । न । रूपवत्त्वे विभुत्वानुपपत्तेः रूपवच्चाक्षुषत्वे वाजन्यत्वानुपपत्तेः । न च वियदधिकरणन्यायेन जन्यत्वमेवास्त्विति साम्प्रतम् । प्रस्तावे निराकरिष्यमाणत्वात् व्यभिचाराभावे निरनुयोज्यानुयोगप्रसङ्गाच्च । नापि द्वितीयः । स्पर्शरहितद्रव्यत्वात् । न च विशेष्यवैयर्थ्यम् । रूपादिव्यभिचारपरिहारार्थत्वात् । न चैवमपि घटादौ व्यभिचारः[1] । द्रव्यत्वे सति स्पर्शात्यन्ताभावाधिकरणत्वस्य हेतुत्वात् । न च रूपवत्त्वेन स्पर्शवत्त्वानुमानात् स्पर्शरहितद्रव्यत्वमसिद्धमिति वाच्यम् । रूपवत्त्वे मानाभावात् । तर्कसङ्ग्रहकारास्तु मनस्त्वं स्पर्शवदवृत्तिवेगवद्वृत्तिजातेरन्यत् जातित्वात् गोत्ववदिति तमसो द्रव्यत्वे प्रमाणमाहुः । तदप्रमाणम् । स्पर्शवदमूर्त्तान्यतरवृत्तिजातित्वोपाधिग्रस्तत्वात् । न च गगनादौ साध्याव्याप्तिरिति साम्प्रतम् । जातित्वविशेषणावच्छिन्नसाध्यव्याप्तेरिष्टत्वात् । न चेतरोपाधितुल्यन्यायत्वे सत्यप्यवच्छिन्नसाध्यव्यापकत्वादयमनुपाधिरिति शक्यं वक्तुम् । अपरथा सर्वत्रोपाधिविलयप्रसङ्गात्[2] । मनस्त्वं स्पर्शवदवृत्तिवेगवद्वृत्तिजात्यन्यजातिर्न भवति स्पर्शवदमूर्त्तान्यतरवृत्तिजातित्वरहितत्वात् यत् स्पर्शवदमूर्त्तान्यतरवृत्तिजातित्वरहितं तत् स्पर्शवदवृत्तिवेगवद्वृत्तिजात्यन्य-

(१) तथा च स्पर्शरहितत्वस्योत्पत्तिक्षणावच्छेदेन घटादौ सत्त्वात् व्यभिचार इति भावः । स्पर्शात्यन्ताभावेति । स्पर्शात्यन्ताभावस्य निरवच्छिन्नाधिकरणताया विवक्षितत्वादित्यर्थः ।

(२) तथा च धूमवान् वह्नेरित्यादौ आर्द्रेन्धनसंयोगादेः प्रभामण्डलादौ साध्याव्यापकतया अनुपाधित्वप्रसङ्गेन तत्रापि किञ्चिद्विशिष्टसाध्यव्यापकत्वस्यावश्यं वाच्यत्वात् एवं स श्यामो मित्रातनयत्वादित्यादावपीति भावः ।

जातिर्न भवति यथा गगनादि । या पुनः स्पर्शवद्वृत्तिवेगवद्वृत्तिजात्यन्यजातिः न सा स्पर्शवदमूर्त्तान्यतरवृत्तिजातित्वरहिता यथा गोत्वादिजातिरित्यन्वयव्यतिरेकिणा सत्प्रतिपक्षत्वाच्च । मनस्त्वमस्पर्शवद्वृत्तित्वरहितामूर्त्तत्वरहितवृत्तित्वरहिताया एव मनस्त्वान्यजातिमदाश्रयव्यावृत्तजातेरन्यज्जातित्वाद् गोत्ववदिति विपर्ययव्याप्तत्वेन विरुद्धत्वाच्च । अत्र च मनस्त्वे मनस्त्वान्यजातिमदाश्रयव्यावृत्तजात्यन्यत्वमेवंविधजात्यन्यत्वेनैवेति नियमस्य साध्यमानत्वान्नानेवंविधसत्ताद्यन्यत्वेन नियमासिद्धिराशङ्कनीया नापि मनस्त्वान्यत्वेन गोत्वे न च सत्तान्यत्व इव तमस्त्वान्यत्वे ऽपि नियमोऽर्थवान् भवितुमर्हति तस्यैतादृक्त्वेनावयोरसम्प्रतिपन्नत्वात् । अनेवंविधसत्तादेस्तु जातिमदाश्रयव्यावृत्तविशेषणेन व्युदस्तत्वात् । अत्र च विशेषणविशेष्यान्यतरव्यतिरेकेण साध्यपर्यवसानमवगन्तव्यम् । उभयव्यतिरेकस्तु न सम्भवत्येवेत्यलं दूषणगवेषणया ।

चक्षुः प्रकाशनाजन्यरूपवद्वीक्षणक्षमम् ।
रूपिग्राहीन्द्रियत्वेन यथैव स्पर्शनेन्द्रियम् ॥ १ ॥
इति यच्चित्सुखाचार्यैरुक्तं तन्न मनोहरम् ।
अरूपीन्द्रियता तत्र यतः साध्यप्रयोजिका ॥ २ ॥

न च रूपवद्ग्राहकत्वं व्यतिरेके प्रयोजकमिति साम्प्रतम् । उपाधिप्रतिरोधौ तु क नामातीवदुर्वचावितिन्यायेन प्राक्तनस्यैवोपाधेरेतद्विपर्यये ऽपि वक्तुं शक्यत्वात् । न चात्मादिषु साध्याव्याप्तिः । रूपीन्द्रियत्वरहितत्वस्यारूपीन्द्रियत्वशब्दार्थत्वात् । यदपि तत्त्वप्रदीपिकाकारैर्वैयर्थ्योपाधिग्रस्ततया तमोऽवयवा नारम्भकाः स्पर्शरहितत्वा-

न्मनोवदिति न मानमित्युक्तम्[1]। तदपि न। किमत्र द्रव्यसमवायिकारणत्वनिषेधं साध्यार्थमभिप्रेत्योपाधेरुद्भावनम्। अजनकत्वमात्रं वा। न प्रथमः। अदृष्टादिषु साध्यसत्त्वेऽपि उपाधेरदर्शनात्। न द्वितीयः। साध्योपाधिनियमे निदर्शनाभावाद् यस्य कस्यापि यत्किञ्चिज्जनकत्वात्। मास्तूपाधिः प्राचीनदोषानुषङ्गस्तु स्यादेवेति चेत्। न स्यात्। तमसोऽवयवत्वेन शङ्क्यमानानां धर्मित्वाभ्युपगमेनोक्तदोषानुषक्तेरेवोक्तदोषानुषङ्गप्रसङ्गात् शङ्क्यमानासत्त्वे कथमाश्रयासिद्धमनुमितमुदयमासादयेदिति चेत् शङ्क्यमानासत्त्वेऽनुपयुक्तत्वेनानुमानानुदयस्यास्माभिरप्यङ्गीकारात् साधनीयस्य शङ्क्यमानाभावस्य भवतैवाभ्युपगतत्वात्। शङ्क्यमानसत्त्वे धर्मिग्राहकप्रमाणबाध इति चेत्। न। शङ्क्यमानसाधकत्वेन भवता शङ्क्यमानस्यास्माभिः प्रमाणत्वानङ्गीकारात्। अस्तु वा एवमारम्भप्रतिषेधः स्पर्शवत्त्वात्यन्ताभावाधिकरणं द्रव्यारम्भकं न भवति स्पर्शवत्त्वात्यन्ताभावाधिकरणत्वान्मनोवदिति। तदेवं साधकमानाभावान्न तमसो द्रव्यत्वमिति सिद्धम्। तथाप्यद्रव्यत्वे किं मानमिति चेत् तमो द्रव्यं न भवति द्रव्यत्वसमानाधिकरणद्रव्यत्वावान्तरजातिरहितत्वे सति चाक्षुषत्वाद् रूपवदिति स्थित एव साधने साध-

(१) तत्त्वप्रदीपिकायामेवंप्रकारेण वैयर्थ्योपाधिर्दत्तः। न हि शरीरतया विषयतया इन्द्रियतया वा मनआरब्धद्रव्यस्य भोगसाधनता सम्भावनीया पार्थिवादिचतुर्विधशरीरानन्तर्भूतस्येन्द्रियानाश्रयस्य शरीरतया भोगसाधनतानुपपत्तेः न च विषयतया रूपस्पर्शशून्यारब्धस्य तद्रहितत्वेन विषयत्वायोगात् नापीन्द्रियतया मनस एवेन्द्रियत्वात् तदारब्धेन्द्रियान्तरस्वीकारवैयर्थ्यात् न च शरीरेन्द्रियविषयानन्तर्भूतस्य कार्यद्रव्यस्य भोगसाधनत्वं परैरङ्गीक्रियत इत्यादि।

नान्तरमाह । तमो द्रव्यं न भवति आलोकनिरपेक्षचक्षुर्ग्राह्यत्वादालोकाभाववदिति । तमो द्रव्यमालोकनिरपेक्षचक्षुर्ग्राह्यत्वादालोकवदिति सत्प्रतिपक्षत्वमिति चेत् । न । दृष्टान्तस्य साधनविकलत्वादालोकस्य विषयालोकतदवयवालोकसापेक्षचक्षुर्वेद्यत्वात् । आलोकाकरणकचाक्षुषप्रत्ययविषयत्वं हेतुस्तच्चालोकेऽस्ति विषयालोकस्य कर्मत्वेन करणत्वासम्भवादिति चेत् । न । विषयालोकावयवानां तत्र करणत्वसम्भवात् । विषयालोकस्यापि संयोगावान्तरव्यापारस्य करणत्वसम्भवाच्चेति केचित् । तन्न । आलोकाभावस्याचाक्षुषत्वप्रसङ्गात् प्रतियोगिव्यतिरिक्तप्रतियोगिग्राहककारणकलापस्याभावग्रहणकारणत्वेन वृद्धैरभ्युपगमात् । न चासावत्र सम्भवति सामग्रीमध्यपातिन आलोकस्यैवात्रासम्भवात् सत्त्वे वा नाभावग्रह इति प्रागुक्तस्यैवात्रानुसन्धीयमानत्वादिति यत्किञ्चिदेतत् । तमोगुणेषु व्यभिचार इति तु वयम् । भवन्मते तमोगुणानामप्यालोकनिरपेक्षचक्षुर्ग्राह्यत्वादालोकाभावे व्यभिचाराच्चेत्यलमतिविस्तरेण ।

**तमःशब्दवाच्यत्वेन विप्रतिपत्तिविषयतया पक्षत्वमालोकाभावशब्दवाच्यतया सम्प्रतिपत्तिविषयतया साध्ययोगित्वेन सपक्षत्वमिति न पक्षसपक्षयोरैक्यदोषः । तमःशब्दो द्रव्यवाचको न भवति आलोकशब्दान्यत्वे सति आलोकनिरपेक्षचक्षुर्ग्राह्यवाचित्वादालोकाभावशब्दवत् ।**

तमःपदेनालोकाभावविवक्षायां सिद्धसाधनं पक्षसपक्षयोरभेदापत्तिश्च स्यादतिरिक्तविवक्षायां च बाध इति चेत्। मैवं वोचः। आलोकाभावतदतिरिक्तत्वसन्देहविषयस्यैव धर्मित्वेनोपादानादालोकाभावशब्दवाच्यतया सम्प्रतिपत्तिविषयस्य च सपक्षत्वेनोपादानान्नैष दोष इति परिहरति। **तमःशब्दवाच्यतयेति**। न चात्र नीरूपत्वानीलरूपत्वादय उपाधयः। साधनव्यापकत्वात्। नीरूपत्वानीलत्वादिसाधने प्रत्यक्षबाध इति चेत्। न। रूपवत्त्वनीलत्वादेः प्रत्यक्षेणानवगमादालोकनिरपेक्षचक्षुषा रूपादिसाक्षात्काराजननात् अन्यथा महान्धकारे कृष्णरूपानुभवप्रसङ्गादिति।

**तत्र गन्धात्यन्ताभावरहिता पृथिवी।**

पृथिवीं निरूपयितुमुपक्रमते। **तत्रेति**। अव्याप्तिपरिहारायात्यन्ताभावरहितेति विशेषणम्। सलिलादावपि तदुपलब्ध्यातिव्याप्तेर्नेदं लक्षणमिति तर्कसङ्ग्रहकारा मन्यन्ते। तन्न विचक्षणपरीक्षाक्षममीक्षामहे। पृथिवीसम्बन्धादेवान्यत्र तदुपलब्ध्युपपत्तेः। नियामकाभावान्नैवमिति चेत्। न। कुसुमादिसन्निकर्षाभावे तदनुपलब्धेरेव नियामकत्वात्। सलिलाद्यवयवासन्निकर्षे कुसुमादावपि कदाचित्तदनुपलब्धेर्वैपरीत्यमेव किं न स्यादिति चेत्। न। तदानीमपि तत्र गन्धस्योपलभ्यमानत्वात्। तर्हि तदानीमपि भूतान्तरसंसर्गस्तत्रास्तीति न पृथिवीमात्रस्य गन्धवत्त्वमिति चेत्। न। तदानीमपि तत्र भूतान्तरसंसर्गोऽस्तीत्यत्र मानाभावात्। गन्धोपलब्धिरेव प्रमाणमिति चेत्। मैवं वोचः। गन्धोपलब्धेर्भूतान्तरसम्बन्धनिबन्धनत्वेन जातुचिन्नियमानभ्युपगमात्। अपि च

यद्भूतान्तरसम्पर्कात् पृथिव्यां गन्धोपलब्धिरित्यभिधीयते तत्र गन्धोपलब्धेर्भूतान्तरसम्पर्कमन्तरेणैव भवताभ्युपेतत्वाद् गन्धोपलब्धेर्व्यभिचारापत्तेः तत्परिहाराय तत्रापि भूतान्तरसम्पर्के ऽभिधीयमाने गन्धोपलब्धेस्तदुपाधिकत्वानुपपत्तिप्रसङ्गादेवं क्वचिदनुपरमे ऽनवस्थापत्तेः क्वचिदुपरमे च व्यभिचारापत्तेः भूतान्तरस्य च गन्धवत्त्वे तत्प्रकृतिकेन्द्रियस्य गन्धवदिन्द्रियत्वेन घ्राणवद्गन्धग्राहकत्वप्रसङ्गाच्च । पृथिव्यां स्वाभाविकगन्धानभ्युपगमवादिनं प्रति साधनशून्यं निदर्शनमिति चेत् । न । बहिरिन्द्रियत्वेन ग्राह्यजातीयविशेषगुणवत्त्वात् तत्सिद्धेः । स्पर्शवदिन्द्रियत्वेन घ्राणस्य स्वग्राह्यविशेषगुणसमानाधिकरणद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वानुमानादपि स्वाभाविकगन्धसिद्धेर्दुर्वारत्वाच्च । व्यापकानुपलब्धेश्च न भूतान्तरगुणत्वम् । वज्रादिगतवदनुद्भूतत्वादनुपलम्भ इति चेत् । न । अकठिनोद्भूतस्पर्शवद्वृत्तिगन्धत्वेनानुद्भूतत्वानुपपत्तेः । अनभिव्यक्तत्वात् कुङ्कुमगन्धवत् पूर्वं न भासते चम्पकादिसम्भेदे तु भासत इति चेत् । न । व्यञ्जकगन्धातिरिक्तगन्धानवभासात् चन्दनगन्धीत्यौपाधिकत्वेन प्रतीतेश्च । गन्धत्वं पृथिवीगुणमात्रवृत्ति पाकजगुणमात्रवृत्तित्वात् पाकजविशेषगुणत्ववदिति पृथिवीगुणमात्रवृत्तित्वानुमानादपि नातिव्याप्तिः । पिठरपाकप्रक्रियावादिनां हेतोरसिद्धिरिति चेत् । न । तस्या एवासिद्धेः । गन्धत्वं पृथिवीतदितरगुणवृत्ति गन्धवृत्तित्वाद् गुणत्ववदिति सत्प्रतिपक्षत्वमिति चेत् । न । एतद्गन्धान्यत्वात्यन्ताभावेनानैकान्तिकत्वाद् गन्धत्वाधिकवृत्तित्वोपाधिग्रस्तत्वाच्च । पाकजविशेषगुणत्वे साध्याव्याप्तिरिति चेत् । न । विषमव्याप्तिकत्वेन तत्त्वादिति सर्वं सुस्थम् ।

**करकासमवेतवाजिविषाणसमवेतजातिमती वा ।**

लक्षणान्तरमाह । करकेति । वाजिविषाणसमवेतेति । वाजिनि विषाणे च समवेतेत्यर्थः ।

**सा द्विविधा नित्यानित्यभेदात् । नित्यः परमाणुरनित्या कार्यरूपा ।**

अनवस्थाप्रसङ्गः स्याद् यदि जन्यैव सा भवेत् ।
एकस्य कस्यचिच्चेत् स्यादन्त्यस्यावयवस्य च ॥
विनिवृत्तिः प्रसज्येत कार्यद्रव्यमनाश्रयम् ।
इति नित्यैव सा चेत् स्यात् तर्हि स्यादप्रमाणिका ॥
द्रव्यान्तरं प्रसज्येत कार्यं गन्धाश्रयं च ते ।
एवं हृदि निधायैवं द्विधेति परिकीर्तितम् ॥

सा द्विविधेत्यादिना ।

**पृथिवीत्वं नित्यवृत्ति घटपटवृत्तिजातित्वात् सत्तावदिति तत्सिद्धिः ।**

नित्यसत्त्वे मानमाह । पृथिवीत्वमिति । पृथिवीत्वमनित्यमात्रवृत्ति पृथिवीमात्रवृत्तित्वात् पटत्ववदिति न नित्यपृथिवीसिद्धिरिति तर्कसङ्ग्रहकारा मन्यन्ते । तदपरे न क्षमन्ते । द्रव्यत्वसाक्षाद्व्याप्यजातित्वाभावोपाधिग्रस्तत्वात् । सुमेरुसर्षपादीनां मानभेदानुपपत्तिप्रसङ्गाच्च सर्षपावयवैरेव वा जगति व्याप्ते मेर्ववयवानामनवकाशप्रसङ्गाच्च । पृथिवीत्वं नित्यानित्यवृत्ति कृत्स्नपृथिवीवृत्तित्वात् सत्तावदिति सत्प्रतिपक्षग्रस्तत्वाच्च । ब्रह्मवादिमते साध्यविकलो दृष्टान्त इति चेत् तत् किमिदानीं नित्यस-

न्नास्तीत्येवाभ्युपगच्छसि ओमिति ब्रुवतो ब्रह्मवादितापरित्यागे शून्यवादितैव पर्यवस्येत् । अस्तु तर्हि वस्तुस्वरूपमेव सत्त्वं जातित्वे मानाभावादिति चेत् । न । सत्सदित्यनुवृत्तप्रत्ययस्यैव मानत्वात् स्वरूपस्य चाननुवृत्तत्वेनानुवृत्तप्रत्ययाजनकत्वात् । जात्यादाविव सर्वत्र सत्सदिति प्रत्ययः स्वरूपनिबन्धन एवेति चेत् । न । बाधकबलेन तत्र तथा व्यवस्थापनादन्यथा सर्वजातिविलयापत्तेः । अनुमानं तु द्रव्यगुणकर्माण्येकसामान्यवन्ति सामान्यवत्त्वात् सम्मतवदिति । अनित्यसमवेतगुणकर्मणी द्रव्यनिष्ठजातिमती अनित्यसमवेतत्वाद् गोवदिति वा । यद्वा घटो घटनिष्ठजातिमत्समवायिकारणं समवायिकारणत्वाद् घटावयववत् । यद्वा घटो घटनिष्ठव्यावृत्तत्वरहितजातिमान् जातिमत्त्वात् पटवत् । यद्वा अयं घट एतन्निष्ठव्यावृत्तत्वरहितजातिमान् जातिमत्त्वात् पटवदिति नवीनाः । वृद्धमतेन तु घटो घटनिष्ठजातिमद्व्यावृत्तत्वरहितजातिव्यावृत्तजातिमान् जातिमत्त्वादयमेतन्निष्ठजातिमद्व्यावृत्तत्वरहितजात्यादिव्यावृत्तजातिमान् जातिमत्त्वाद् घटवदिति प्रयोक्तव्यम् ।

**न च पक्षासिद्धिः । घटो गगनवृत्तित्वरहितपटवृत्तिजातिमान् घटपटव्यतिरेकित्वरहितत्वात् पटवदिति पृथिवीत्वसिद्धिः ।**

अस्तु तर्हि पृथिवीत्वासिद्धावाश्रयासिद्धिरिति चेद् द्रव्यत्वं रसावृत्तिघटपटवृत्तिजातेरन्यज्जातित्वाद् गोत्ववदिति मानसिद्धत्वात् । प्रमाणान्तरमाह । घट इति । घटपटव्यतिरेकित्वरहितत्वं तु घटव्यतिरिक्तत्वे सति पटव्यतिरिक्तत्वात्यन्ताभाववत्त्वमिति न दूषणावकाशः ।

**न च सत्तासिद्धिः गगनं द्रव्यत्वेतरजातिमद् भूतत्वाद् घटवदित्यनुमानात् सत्तासिद्धिः ।**

दृष्टान्तासिद्धिमाशङ्क्याह । गगनमिति । तदेतत् प्रष्टव्यम् । विभुत्वजात्या कथं न सिद्धसाधनतेति । विभुत्वं न जातिरिति चेत् । न । गोत्वादिना तुल्यन्यायत्वात् । जातिबाधकान्नैवमिति चेत् । न । तदनभिधानात् । न च बाधकान्तरमस्ति ततः प्रागुक्तमेव मानमनुसन्धेयम् ।

**न च द्रव्यत्वासिद्धिः । गगनादि रूपावृत्तिजातिमद् गुणवत्त्वाद् घटवदिति द्रव्यत्वसिद्धिः ।**

द्रव्यत्वासिद्धावप्रसिद्धविशेषणत्वमाशङ्क्याह । गगनादीति । अत्र च करका रूपानिष्ठघटनिष्ठजातिमती स्पर्शाधिकरणत्वात् पटवदित्यपि द्रष्टव्यम् । निर्गन्धस्पर्शवतां पक्षतुल्यत्वान्न तत्र व्यभिचारः शङ्कनीयः उक्तनीतेरत्रापि सुलभत्वात् ।

अथवैवं प्रयोक्तव्यमरूपत्वेनासमाश्रया(१) ।
असमानाधिकरणेत्यर्थः ।
अरूप्यसमवेतत्वरहितत्वेन सम्मता ॥
या जातिराश्रयस्तस्याः कुम्भ इत्यभिधीयते ।
कुतः कुम्भानिलान्यत्ववैधुर्यादनिलो यथा ॥ इति ।

(१) प्रयोक्तव्यं रूपत्वेनासमाश्रया-इति सङ्गच्छते ।

अथ स नित्यत्रसरेणुरेव किं न स्यात् । न स्यात् । तत्र मानाभावात् । त्रसरेणुर्नित्यो महत्त्वोत्कर्षापकर्षशून्यत्वाद् गगनवदिति चेत् । न । महत्त्वापकर्षशून्यत्वस्यैव प्रयोजकत्वे व्यभिचाराभावात् महत्त्वापकर्षाधिकरणत्वेन सत्प्रतिपक्षत्वाच्च । वल्लभाचार्यास्तु त्रसरेणुर्भगवान् चाक्षुषद्रव्यत्वात् पटवदित्यनित्यत्वे प्रमाणमाहुः । वादीन्द्रास्तु त्रसरेणुः सावयवावयवो महत्त्वे सति चाक्षुषत्वात् पटवदित्याहुः । न चात्र महत्समवेतत्वमुपाधिः अयं घट एतदन्यमहत्समवेतत्वरहितसावयवावयवान्यः कार्यत्वात् पटवदिति सिद्धे महत्समवेतत्वरहितसावयवावयवे साध्याव्यापकत्वात् । न च महत्त्वासिद्धाल्लिङ्गता शङ्कनीया अचाक्षुषद्रव्यत्वापत्तेः । स्मृतिरपि चात्र भवति ।

> जालान्तरगते भानौ यत् सूक्ष्मं दृश्यते रजः ।
> प्रथमं तत् प्रमाणानां त्रसरेणुं प्रचक्षते ॥
> त्रसरेणुस्तु विज्ञेयो ह्यष्टौ ये परमाणवः ।
> परमाणुः परं सूक्ष्मं त्रसरेणुर्महद्रजः ॥ इति वा ।

अणोरणीयस्त्वप्रतिपादकादागमादपि परमाणुसिद्धिरवसेयेत्यलं विस्तरेण ।

## कार्यं त्रिविधं शरीरादिभेदेन ।

कार्यत्रैविध्यमाह । कार्यमिति । यत्त्वत्र कल्पतरुणा प्रजगल्भे यत्त्वत्र नैयायिकाः शरीरस्य पाञ्चभौतिकत्वमसहमानाः प्राहुः यदि देहः पञ्चभूतसमवायिकारणकः स्यात् तर्हि द्रव्यं न स्यात् तद्बहुत्ववत् यदि च प्रत्यक्षाप्रत्यक्षसमवायिकारणकः स्यात् प्रत्यक्षो न स्याद् वायुवनस्पतिसंयोगवत् तस्मान्न देहः पञ्चभूतसमवायिकारणकः द्रव्यत्वादाकाशवत् । नापि प्रत्यक्षाप्रत्यक्षसमवायिकारणकः प्रत्य-

क्षत्वात् पटवत् । तोयाद्यारब्धत्वे तोयत्वादिजातिसङ्करप्रसङ्गश्चेति । तन्न । त्र्यणुकादेरपि प्रत्यक्षत्वादिहेतोरप्रत्यक्षसमवायिकारणत्वाभावानुमानापातात् । जातिसङ्करश्च न दूषणम् । अथान्योन्यपरिहारेण भिन्नव्यक्तिनिवेशिनोः सामान्ययोः समावेशे गोत्वाश्वत्वयोरप्यसमाविष्टत्वनिश्चयाभावप्रसङ्गादुच्छिद्येत तदेतज्जातीयकथा तथा चाप्तवचनावसिततुरगभावे तुरगत्वात् स गौर्नेत्याद्यनुमानपूर्वकव्यवहारविलोपप्रसङ्ग इति मन्यसे । तदप्यसत् । परस्परव्यभिचारिण्योऽपि पृथिवीत्वादिजातय एव क्रियत्स्वेव देहादिषु समाविशन्ति नान्यत्र नान्यांश्चेत्यभ्युपगमेन व्यवस्थोपपत्तेः । अपि चैवं वदतः प्रमाणार्थ एवं सम्पद्यते पृथिवीत्वजलत्वे नैकत्र समाविशतः परस्परव्यभिचारित्वाद् गोत्वाश्वत्ववदिति । तत्र परस्परेति पृथिवीत्वसलिलत्वविवक्षायां साधनविकलो दृष्टान्तः न हि गोत्वाश्वत्वे पृथिवीत्वं परिहरतः । गोत्वाश्वत्वविवक्षायामविशेषेण यत्किञ्चित्परस्परविवक्षायां च हेतोरनैकान्तिकता गुणत्वरूपत्वयोर्गोत्वाश्वत्वे त्यजतोर्यत्किञ्चित्परस्परात्मकस्तम्भकुम्भौ परिहरतोरप्येकत्र समावेशात् ।

तस्मात् प्रसिद्धिसामर्थ्याद्बाधकस्यानिरूपणात् ।
पञ्चभूतमयः कायः श्रुतितोऽपि प्रमीयताम् ॥

श्रूयते हि पृथिवीमय इत्यादि । अनुमानमपि देवदत्तशरीरमेतज्जनकत्वे सत्यनुदकत्वातेजस्त्वावायुत्वानाकाशत्वात्यन्ताभाववत्समवायिकारणं शरीरत्वाद् यज्ञदत्तशरीरवत् । यद्यपि यज्ञदत्तशरीरमनुदकत्वादिमत्पृथिवीसमवायिकारणकं परेषां सिद्धं तथापि देवदत्तशरीरजनकत्वे सत्यनुदकत्वादिमज्जन्यं न भवति तस्य देवद-

त्तशरीरजनकत्वाभावेन तद्विशिष्टानुदकत्वादिमत्त्वरहितत्वादतो न साध्यविकलता शङ्कनीया । एतज्जनकत्वे सत्यनुदकत्वादिमत्त्वरहितजन्यत्वमेतज्जनकत्वरहितजन्यत्वाद्वा अनुदकत्वादिमत्त्वरहितजन्यत्वाद्वा तत्राद्यो व्याघातान्नैव युज्यते द्वितीयस्तु सिद्धान् उदकत्वादिमज्जन्यमन्तर्भाव्यैव सिद्ध्यतीति पाञ्चभौतिकत्वसिद्धिरिति । तदेतद् बालविभीषिकामात्रमिति न्यायतत्त्वविदः प्राहुः । तथाहि यदिदं पाञ्चभौतिकत्वसाधकत्वेनोपन्यस्तं तत् तावद् देवदत्तशरीरान्यकार्यत्वोपाधिग्रस्ततया नोदयमासादयति न च पक्षेतरत्वादनुपाधित्वमाशङ्कनीयम् । व्यावर्त्यस्य गगनादेर्विपक्षस्य सत्त्वात् । देवदत्तशरीरमेतज्जनकत्वे सति उदकत्वतेजस्त्ववायुत्वाकाशत्वात्यन्ताभाववज्जन्यं शरीरत्वाद् यज्ञदत्तशरीरवदिति विपर्ययव्याप्तत्वेन विरुद्धत्वाच्च । न चोदकत्वाद्यत्यन्ताभाववज्जन्यत्वं यज्ञदत्तशरीरस्य परेषामसिद्धमित्यसिद्धसाध्यं निदर्शनमिति नाशङ्कनीयम् । एतज्जनकत्वरहितजन्यत्वेन साध्यप्रसिद्धेः ।

न जातिसङ्करो दोष इति रिक्तं वचो यतः ।
गोत्वाश्वत्वसमावेशस्तदा केन निवार्यते ॥
तयोरपि समावेशः स्वीकर्तुं नैव शक्यते ।
तथा सति तयोरैक्यं कथङ्कारं निषिध्यते ॥
व्यवहारेऽपि किं भेदो नेष्यते चिरजीविना ।
तथा कथाधिकारः स्यात् कथमद्वैतवादिनः ॥
तद्व्यञ्जकासमावेशात् समावेशो न चेत्तयोः ।
भूतत्वादेरपि तस्मात् स्यादसमाविष्टता मम ॥

चित्ररूपवदेतत् स्यादिति चेत् । न । वैषम्यात् तत्र हि अवयविनो नीरूपत्वे चाक्षुषत्वं न स्यान्नीलपीतादि-

नानाव्याप्यवृत्तिरूपादिमत्त्वे ऽनुपलम्भविरोधः अव्याप्यवृत्तित्वे च व्याप्यवृत्तिजातीयताविरोधः विरुद्धजातीयैकरूपवत्त्वे सङ्करप्रसङ्गः ततो विजातीयानां रूपाणां जनकत्वमध्यक्षसिद्धम्। अत्र त्वेकैकारभ्यविजातीयं द्रव्यं नाध्यक्षसिद्धमतो गुणविरोधाद् विजातीयानारम्भः(१) सिद्ध एवेति गृहाण। नन्वध्यक्षाभावे ऽपि पृथिवीत्वं जलोपादेयवृत्ति पृथिवीनिष्ठात्यन्ताभावाप्रतियोगित्वाद् द्रव्यत्ववदित्यनुमानं स्यादिति चेत्। न स्यात्। जलाणुपृथिव्यन्यतरत्वे ऽनैकान्तिकत्वात् प्रसिद्धजलोपादेयवृत्तित्वसाधने बाधादप्रसिद्धजलोपादेयवृत्तित्वसाधने चाप्रसिद्धविशेषणत्वात्। अपृथिवीवृत्तित्वेन सोपाधिकत्वाच्च। पृथिवीसमवेतं द्रव्यं न निर्गन्धसमवेतं गन्धवत्त्वात् पृथिवीमात्रारभ्यद्व्यणुकवदिति सत्प्रतिपक्षत्वाच्च। न दृष्टान्तासिद्धिः। विजातीयैरारम्भे ऽपि सजातीयैरारम्भस्येष्टत्वात्। यत्तु कैश्चिदभिहितं पृथिवीत्वं जलोपादानवृत्ति जलावृत्तिधर्मत्वाद् वायुत्ववदिति। तत्र जलोपादानशब्देन जलमभिधीयते पृथिवी वा प्रथमे साध्यावैशिष्ट्यं द्वितीये व्याघात इत्युपेक्ष्यम्। अथ सङ्कीर्णत्वादजातित्वमेव किं न स्यादिति मन्यसे। तन्न। अस्ति तावत् प्रतिगन्धवतां समवायिकारणत्वम्। न चैतदुपलब्धपूर्वभावानां व्यक्तीनामेव भवितुमर्हति सति भावमात्रस्याहेतुत्वात्मकत्वात्। अन्यथा रासभादेरपि पटादिकारणतापत्तेः। अपि तु सत्येव भावः स च कतिपयव्यक्त्युपग्रहमन्तरा न घटत इति तदुपग्राहको जातिविशेषः स्वीकर्तव्य एव स एव च पृथिवीत्वम्। एवमप्त्वादिजातिसाधनं द्रष्टव्यमित्यास्तां

(१) टिप्पण्यां बुद्धेत्यधिकः पाठः।

विस्तरेण । योऽपि च त्र्यणुकादेः प्रत्यक्षत्वहेतुना प्रत्यक्षसमवायिकारणकत्वप्रसङ्गोऽभिहितः । सोऽपि न युक्तः । शब्दादावनैकान्तिकत्वात् तेषामपि पक्षत्वे कालातीतताप्रसङ्गात् तदाश्रयाणामरूपिद्रव्यतया बाह्येन्द्रियाप्रत्यक्षतयैव सिद्धेः आत्मन्यनैकान्तिकत्वाच्च । यत् पुनः परस्परशब्दार्थविकल्पनेन दूषणमभिहितं तत् तादृशप्रमाणार्थानभ्युपगमादेव निरस्तम् । कस्तर्हि भवतः प्रमाणार्थोऽभिमत इति चेच्छ्रूयतामवधानेन । भूत्वं नाप्त्वैकार्थसमवेतं तद्व्यापकत्वरहितत्वे सति तद्व्यभिचारिजातित्वाद् गोत्ववत् । जलाणुपृथिव्यन्यतरत्वे व्यभिचारो माभूदिति जातिग्रहणम् । द्रव्यत्वे व्यभिचारो माभूदिति विशेषणोपादानम् । तद्व्यभिचारित्वं च न तद्वन्निष्ठात्यन्ताभावप्रतियोगित्वमपि तु तदत्यन्ताभाववद्वृत्तित्वमिति न साध्यावैशिष्ट्यमाशङ्कनीयम् । यद्वा पृथिवीत्वमप्त्वाधिकरणनिष्ठात्यन्ताभावप्रतियोगि अप्त्वाव्याप्यजातित्वाद् गोत्ववत् । अप्त्वं वा पृथिवीत्ववन्निष्ठात्यन्ताभावप्रतियोगि पृथिवीत्वाव्याप्यजातित्वाद् गोत्ववत् । व्याप्यव्यापकभावस्य भेदाधिष्ठानत्वेनाप्त्वादेरप्यप्त्वाद्यव्याप्यत्वादनैकान्तिको हेतुरिति चेत् । न । अप्त्वादिमन्निष्ठात्यन्ताभावाप्रतियोगित्वस्याप्त्वादिव्याप्यत्वस्याप्त्वादावपि विद्यमानत्वात् । पृथिवीत्वमव्याप्यं यस्या इत्यनेनाकारेण द्वितीयानुमाने साधनशून्यता निदर्शनगता परिहरणीयेत्यलमतिपाऽडया ।

तस्मात् प्रसिद्धसामर्थ्याद् बाधकस्य निरूपणात् ।
त्वत्प्रमाणस्य दुष्टत्वान्न देहः पाञ्चभौतिकः ॥

शरीरलक्षणं दर्शयति । भोगायतनमन्त्यावयवि शरीरम् । तत्र न तावद् भोगायतनत्वं भोगाश्रय-

त्वमसम्भवित्वादात्मन्यतिव्यापकत्वाच्च । नापि भोगसाधनत्वं जनकत्वं स्यादात्मादावतिव्यापकत्वात् करणत्वस्य च मनस्यतिव्यापकत्वात् । असमवायिकारणानुरोधेन विभुकार्यविशेषगुणानां देशनियमाच्छरीरे ऽसम्भवाच्च । यदवच्छिन्नात्मनि भोगः तदायतनमिति चेत् । न । मनस्यतिव्यापकत्वादसमवायिकारणानुरोधेन विभुकार्यविशेषगुणानां देशनियमस्योदयनादिभिः स्वीकारादात्ममात्राश्रयस्य भोगस्य शरीरतदवच्छेद्योर्भोगानाश्रयत्वेन शरीरावच्छिन्नात्माश्रयत्वेनासम्भवित्वाच्च । शिरश्चरणादावतिव्यापकत्वाच्च शिरसि मे सुखं पादे मे वेदनेत्याद्यनुभवबलेन शिरःपादावच्छिन्ने ऽप्यात्मनि भवद्भिर्भोगस्वीकारात् । अत्यन्तावयवित्वे सतीति विशेषणाददोष इति चेत् । न । अत्यन्तावयवित्वस्यैव निर्वक्तुमशक्यत्वात् । द्रव्यानारम्भकं कार्यद्रव्यमत्यन्तावयवीति चेत् । न । पटादावव्याप्तेः न च पटो न द्रव्यारम्भक इति वाच्यम् । पटद्वयारब्धरज्जुद्रव्यस्याध्यक्षत एव सिद्धेः । उच्यते । ज्ञानजनकात्मसंयोगाश्रयत्वं भोगायतनत्वमत्यन्तावयवित्वविशेषणोपादानान्नात्मादावतिव्याप्तिः । तथाप्यात्मसंयोग्ययं घटादिरिति विशिष्टज्ञानजनकविशेषणीभूतात्मसंयोगाश्रये ऽन्त्यावयविनि घटादावतिव्याप्तिस्तदवस्थैवेति चेत् । मैवम् । आत्मसंयोगविषयत्वरहितज्ञानस्यैव ज्ञानपदेनोपादानात् । द्रव्याजनककार्यद्रव्यत्वं चान्त्यावयवित्वम् । न च पटादावव्याप्तिः घटपटव्यतिरेकित्वरहितत्वेन घटवत् तत्र तत्प्रतिषेधात् । न च घटपटव्यतिरेकित्वरहितत्वेन पटवद् घटे ऽपि द्रव्यजनकत्वं साधयितुं शक्यम् । जनितद्रव्यस्य योग्यत्वे योग्यानुपलम्भविरोधः । न चायोग्यं तत् । प्रत्यक्षसमवायिकारणक-

द्रव्यत्वेन तत्प्रतिषेधात् । न चैवंसाधने ऽनुभवविरोधः परस्परसंयोगित्वातिरिक्तानवभासनादिति सर्वं सुस्थम् ।

त्वचः समस्तावयवैः संयोगी मूर्त्त उच्यते ।
त्वचासंयुक्तदेशेन विकलः करणाद् बहिः ॥
व्याप्त्या त्वगिन्द्रियसंयोगाश्रय इत्यर्थः ।
एतद्वा कायलक्ष्मेति वादिवागीश्वरो जगौ ॥

तद् द्विविधं योनिजमयोनिजं चेति । शेषे प्रमाणं नास्तीति चेत् । न । अहं मदीययोनिजान्यपार्थिवशरीरवान् संसारित्वाच्चैत्रवत् । यद्वा पृथिवीत्वमयोनिजशरीरवृत्ति द्रवत्वसमानाधिकरणद्रव्यत्वावान्तरजातित्वादप्त्ववदिति । श्रुतिरपि चात्र भवति हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीदित्यादिका । स्मर्यते च । अयोनिजशरीराणि भवन्त्यद्भुतकर्मणामिति ।

**शरीरसंयुक्तमपरोक्षप्रतीतिसाधनमतीन्द्रियमिन्द्रियम् । ज्ञानकरणजन्यत्वरहितज्ञानत्वमपरोक्षत्वम् ।**

इन्द्रियलक्षणं साक्षात् प्रतीतिकरणमित्येव नाधिकं व्यावर्त्याभावाद् द्वितयमेव प्रतीतिकरणं लिङ्गमिन्द्रियं च लिङ्गं च साक्षात्पदेन निरस्तमिति । वादीशस्तु साधनशब्दस्य कारणवाचित्वमभ्युपगम्य निर्विकल्पकजनकशरीरसंयोगाधिकरणत्वे सति योगजधर्माजन्यजन्यसाक्षात्काराविषयत्वे सति शरीरत्वानधिकरणमिन्द्रियमिति यथाश्रुतमेवैतद्व्याचक्षते । तत्रेतरेतराश्रयत्वं परिहर्तुमतीन्द्रियत्वलक्षणमाह । **अतीन्द्रियत्वमज्ञातसाधनत्व-**

(१)मिति । योगजधर्माद्यजन्यजन्यसाक्षात्काराविषयत्वमिति वा द्रष्टव्यम् ।

प्रतीयमानतया भोगसाधनं विषयः । इति पृथिवीप्रकरणम् ।

पर्यवसिता पृथिवी ॥

पृथिवीवृत्तित्वरहितहिमकरकावृत्तिजातिमज्जलम् । तन्नित्यानित्यभेदाद् द्विविधम् । जलत्वं नित्यवृत्ति हिमकरकावृत्तिजातित्वात् सत्तावदिति तत्सिद्धिः । करका गगनवृत्तित्वरहितहिमवृत्तिजातिमती स्नेहाधिकरणत्वाद्धिमवदिति करकायां तत्सिद्धिः । अनित्यं त्रिविधं शरीरादिभेदेन । शरीरं वरुणलोके । जलपरमाणवः पारम्पर्येण शरीरारम्भकाः इन्द्रियारम्भकत्वात् पार्थिवपरमाणुवत् । इन्द्रियारम्भकत्वं तु रसनस्याप्यत्वात् सिद्धम् । रसनमाप्यं रूपादिषु पञ्चसु मध्ये रसस्यैवाभिव्यञ्जकत्वात् सक्तुरसाभिव्यञ्जकसलिलवदिति । रसनसिद्धिस्तु रसोपलब्धिः करणसाध्या अपरोक्षप्रतीतित्वाद् रूपोपलब्धिवदिति । विषयस्तु सरित्समुद्रादिर्हिमकरकादिः । न च करकायाः काठिन्यात् पार्थिवत्वमाशङ्कनीयम् । अनन्तरमेव स्वभावापगमादिति । इत्यप्प्रकरणम् ।

(१) अतीन्द्रियत्वं नामाज्ञातसाधनत्वमिति मुद्रितलक्षणावल्यां पाठः ।

आपो निगदव्याख्याताः ॥

स्पर्शात्यन्ताभावसमानाधिकरणरूपाधिकरणं तेजः । करकावृत्तित्वरहितविद्युदाकरजवृत्तिजातिमद्वा । विद्युत्तेजः करकावृत्तित्वरहिताकरजवृत्तिजातिमती वा विद्युद्व्यतिरिक्ताकरजान्यत्वरहितत्वादाकरजवत् । आकरजं सुवर्णादि । ननु सुवर्णादिकं पार्थिवं नैमित्तिकद्रवत्वाधिकरणत्वाद्[1] घृतवत् । अनेन पार्थिवत्वसिद्धावाकरजवृत्तिजातिमत्त्वसाधने ऽपि विद्युत्तेजसो न तैजसत्वसिद्धिरिति चेत् । न । सुवर्णादिकमपार्थिवमत्यन्ताग्निसंयोगे ऽप्यनुच्छिद्यमानद्रवत्वाधिकरणत्वादिति प्रत्यनुमानेनापार्थिवत्वसिद्धौ असांसिद्धिकद्रवत्वेन तत्सिद्धिः । अन्यथा पार्थिवत्वे द्रवत्वमत्यन्ताग्निसंयोगे उच्छिद्येतेति तर्कोऽनुसरणीयः । तच्च द्विविधं नित्यमनित्यं चेति । तेजस्त्वं नित्यवृत्ति विद्युदाकरजवृत्तिजातित्वात् सत्तावदिति नित्यत्वसिद्धिः । साधितं तेजस्त्वम् । अनित्यं त्रिविधं शरीरादिभेदेन । शरीरमादित्यलोके तस्यापि पूर्ववत् सिद्धिः । इन्द्रियं रूपोपलम्भकं चक्षुः । रूपोपलब्धिः करणसाध्या क्रियात्वा-

(१) नैमित्तिकद्रवत्वादिति प्रथममूलादर्शपुस्तके पाठः ।

च्छिदिक्रियावदिति तत्सिद्धिः। कर्तृप्रेर्यं करणम्। धातुवाच्या क्रिया। चक्षुस्तैजसं रूपादिषु पञ्चसु मध्ये रूपस्यैवाभिव्यञ्जकत्वादालोकवत्। विषयस्तु भौमादिः। इति तेजःप्रकरणम्।

विद्युदिति। आकरजान्यत्वरहितत्वाभावेऽपि विद्युद्व्यतिरिक्तत्वरहितत्वेन पक्षधर्मत्वं विद्युद्व्यतिरिक्तत्वरहितत्वाभावेऽप्याकरजान्यत्वरहितत्वेन सपक्षसत्त्वं च बोद्धव्यम्। तेजः॥

रूपात्यन्ताभावाधिकरण[1]स्पर्शाधिकरणो वायुः। विप्रतिपन्नः स्पर्शो रूपरहितद्रव्यवृत्तिः स्पर्शत्वरहितशब्दान्यत्वरहितत्वाच्छब्दवदिति वायुसिद्धिः। स च द्विविधो नित्यानित्यभेदेन।

विप्रतिपन्न इति। अनुष्णाशीतापाकज इत्यर्थः। स्पर्शत्वाधिकरणत्वेन पक्षधर्मत्वम्। शब्दान्यत्वरहितत्वेन सपक्षसत्त्वम्।

वायुत्वं नित्यवृत्ति नित्यवृत्तित्वरहितवायुत्वान्यत्वरहितत्वात् पृथिवीत्ववदिति तत्सिद्धिः। कार्यं त्रिविधं शरीरादिभेदेन।

वायुपरमाणुं साधयति। वायुत्वमिति। यद्यपि नित्यवृत्तित्वरहितत्वं[2] सन्दिग्धं तथापि वायुत्वान्यत्वरहितत्वनिश्चयेन विशिष्टस्य पक्षधर्मत्वमुपपद्यते।

(१) रूपात्यन्ताभावसमानाधिकरणेति मूलादर्शप्रथमपुस्तके पाठः।
(२) रहितत्वरहितत्वमित्यादर्शपुस्तके पाठः।

वायुत्वं शरीरवृत्ति बाह्येन्द्रियवृत्तिजातित्वात् सत्तावदिति तत्सिद्धिः। स्पर्शोपलम्भकमिन्द्रियं वायवीयं रूपादिषु पञ्चसु मध्ये स्पर्शस्यैवाभिव्यञ्जकत्वाद् व्यजनपवनवदिति। विषयस्तु उपलभ्यमानस्पर्शाधिष्ठानभूतः प्राणस्तु शरीरादिप्रेरण[1] हेतुर्वायुः। इति वायुप्रकरणम्।

शरीरसाधने मनस्त्वे व्यभिचारो माभूदित्युत्पाद्यपदम्[2]। कथमस्य पृथिवीव्यतिरेक इति चेत् तत्र रूपासमानाधिकरणतया प्रतीयमानस्पर्शः क्वचिदाश्रितो गुणत्वाद् रूपवदिति भाष्यकाराः। पृथिव्याश्रित एव किं न स्यादिति चेत्। न। रूपासमानाधिकरणेत्युक्तत्वात्। ननु किमत्रानुपलम्भमात्रेण रूपासामानाधिकरण्यं योग्यानुपलम्भेन वा। न प्रथमः। शीतो वायुरुष्णो वायुरितिप्रतीयमानयोरुष्णशीतस्पर्शयोरपि रूपासमानाधिकरणत्वेन वायवीयत्वापत्तेः। सलिलतेजोगतरूपयोरनुद्भूतत्वेनायोग्यत्वादग्रहणमिति चेत्। न। अनुष्णाशीतस्पर्शाश्रयगतरूपस्याप्यनुद्भूतत्वेनाग्रहणस्य समानत्वादिति चेत्। उच्यते। त्वगिन्द्रियमपार्थिवं गन्धाग्राहकेन्द्रियत्वाच्चक्षुर्वत् नाप्यं रसाग्राहकेन्द्रियत्वात् न तैजसं रूपाग्राहकेन्द्रियत्वात् न नाभसं शब्दाग्राहकेन्द्रियत्वात् मनसोऽपि व्यतिरिच्यते बहिरिन्द्रियत्वात् तच्च ग्राह्यजातीयविशेषगुणवद् बहिरि-

(१) शरीरान्तःप्रेरणेति-मूलादर्शप्रथमपुस्तके पाठः।

(२) टीकाकारमते मूलादर्शप्रथमपुस्तके च उत्पाद्येन्द्रियवृत्तिजातित्वादिति मूलपाठः मुद्रितपुस्तके मूलादर्शद्वितीयपुस्तके च बाह्येन्द्रियवृत्तिजातित्वादिति मूलपाठो दृश्यते।

न्द्रियत्वात् । हन्त तर्हि शीतोष्णस्पर्शयोरपि तदधिकरणत्वमायातमिति चेत् । न । रूपरसाग्राहकेन्द्रियत्वेन तस्य निरस्तत्वादुभयाधिकरणत्वे सङ्करप्रसङ्गाच्च । एतेन स्पर्शस्य रूपासमानाधिकरणत्वं व्याख्यातम् । न चानुद्भूतत्वादग्रहः पार्थिवरूपस्पर्शयोः तुल्ययोगक्षेमत्वाच्छीतोष्णस्पर्शाश्रयगतरूपयोरनुद्भूतत्वेनाप्यग्रहोपपत्तेः । एतेनैतत् प्रत्युक्तम् । अयं स्पर्शोऽनुद्भूतरूपपृथिव्याश्रित उद्भूतरूपासमानाधिकरणानुष्णाशीतस्पर्शत्वाद् घ्राणस्पर्शवदिति । उद्भूतस्पर्शत्वाभावेन सोपाधिकत्वाच्चेति । किं च रूपासमानाधिकरणोऽयं स्पर्शो न पृथिवीस्पर्शः शीतस्पर्शसाक्षात्काराजनकत्वादात्मवदितिप्रमाणसद्भावाच्च । न चात्रानुष्णाशीतस्पर्शत्वाभाव उपाधिः घटस्पर्श एतदन्यपृथिवीसमवेतत्वरहितानुष्णाशीतस्पर्शान्यः स्पर्शत्वादन्यस्पर्शवदिति सिद्धे पृथिवीसमवेतत्वरहितानुष्णाशीतस्पर्शे साध्याव्यापकत्वादित्यास्तां विस्तरेण ।

**शब्दात्यन्ताभावानधिकरणं नभः । ( संयोगजन्यजन्यविशेषगुणसमानाधिकरणविशेषाधिकरणं वा ।)[1] शब्दः क्वचिदाश्रितः गुणत्वाद्रूपवत् । न च शब्दस्य[2] स्पर्शवदाश्रयः स्पर्शासहकारित्वाद् बुद्धिवदिति । न च कालाद्याश्रयः बाह्येन्द्रियग्राह्यत्वाद् रूपवदिति परिशेषात्तत्सिद्धिः । इत्याकाशप्रकरणम् ।**

(१) ( ) एतच्चिह्नमध्यस्थः पाठो मूलादर्शप्रथमपुस्तके नास्ति ।
(२) शब्दस्येति मूलादर्शप्रथमपुस्तके नास्ति ।

परिशेषतस्तत्सिद्धिमुपक्रमते शब्द इत्यादिना । गुणत्वमसिद्धमिति चेत् । न । शब्दो गुणः सामान्यवत्त्वे सत्यस्मदादिबाह्याचाक्षुषप्रत्यक्षत्वाद् गन्धवदिति वल्लभाचार्याः । तदेतत् स्पार्शनप्रत्यक्षे घटे कर्मणि चानैकान्तिकम् । अथाचाक्षुषपदेन चाक्षुषत्वानाधारत्वं विवक्षितं तथा च सामान्यवत्त्वे सत्यस्मदादिबाह्यप्रत्यक्षत्वे सति चाक्षुषत्वानाधारत्वं हेतुरिति चेत् । न । तथापि तिमिरोत्पन्नकर्मव्यक्तौ व्यभिचारस्य दुर्वारत्वात् । अथाचाक्षुषपदेन चाक्षुषवृत्तिजात्यनाधारत्वं विवक्षितं तथा च सामान्यवत्त्वे सत्यस्मदादिचाक्षुषवृत्तिजात्यनाधारत्वे सति बाह्यप्रत्यक्षत्वं हेतुरिति चेत् । न । अस्य प्रत्यक्षासमवेतनिरवयवेन्द्रियमात्रवेद्यान्यत्वोपाधिग्रस्तत्वादिति । तदप्यसत् ।

अनुकूलेन तर्केण सनाथे सति साधने ।
साध्यव्यापकताभङ्गात् पक्षे नोपाधिसम्भवः ॥

तर्कश्चानुपदमाचार्यैरेव दर्शितः । यदि निरवयवद्रव्यं स्यादस्मत्प्रत्यक्षो न स्यादिति न च पक्षधर्मत्वासिद्धिः सत्त्वगुणत्वातिरिक्तत्वेन जातेर्विशेषणात् यदि वा सामान्यवत्त्वे सत्यचाक्षुषत्वे सत्यस्मदादिबाह्यैकेन्द्रियग्राह्यत्वं हेतुरिति न किञ्चिदनुपपन्नम् । यद्वा अयं परमाणुः स्वातिरिक्तस्पर्शवत्त्वरहितज्ञानानाश्रयविशेषगुणवदन्यो मेयत्वात् । अयं वायुरेतदितरवायुत्वानधिकरणनीरूपबाह्येन्द्रियप्रत्यक्षगुणवदन्यो मेयत्वाद् घटवदित्याकाशसिद्धिरिति नवीनाः । स च नित्यो विभुश्च । मानाभावादसिद्धमेतदिति चेत् । मैवम् । अद्रव्यद्रव्यत्वानवयवद्रव्यत्वयोः सत्त्वात् । आत्मोपादानकत्वानुभयमप्यसिद्धमिति चेत् । न । अस्यैवासिद्धेः । उत्पत्तिश्रुतिबाधितत्वात् तत्सिद्धिरिति चेत् । न । तस्या मानान्तरविरोधेन स्वार्थे

